## ॥ स्वाध्यायारण्यकनियमाः ॥

अथाऽतो ब्रह्माणं ब्रह्मऋषिं ब्रह्मयोनिमिन्द्रं प्रजापतिं वशिष्ठं वामदेवं कहोलं कौषीतकिं महाकौषीतकिं, सुयज्ञं शाङ्खायनम्, आश्वलायनमैतरेयं महैतरेयं कात्यायनं शाट्यायनं शाकल्यं बभ्रुं बाभ्रव्यं मण्डुं माण्डव्यं सर्वानेव पूर्वाचार्यान्नमस्य स्वाध्यायारण्यकस्य नियमानुदाहरिष्यामः ॥१॥ अहोरात्रं ब्रह्मचर्य्यमुपेत्याऽऽचार्योऽमांसाशी ॥२॥ आमपिशितं[1] चण्डालं सूतिकां रजस्वलां तेदन्यपहस्तकदर्शनान्यनध्यायकानि ॥३॥ शवरूपाणां[1] च ॥४॥ यान्यास्ये[1] न प्रविशेयुः ॥५॥ वान्तकृतश्मश्रुकर्म ॥६॥ मांसाशनश्राद्धसूतक-भोजनेषु ॥७॥ ग्रामाऽध्ययनानन्तर्हितान्यहानि ॥८॥ त्रिरात्रोऽनवक्लृप्तः ॥९॥ पराभिमृष्टः[2] ॥१०॥ उपपर्वणामन्ह उत्तरार्धानि च ॥११॥ अग्नि-विद्युत्स्तनयित्नुवर्षामहाभ्रप्रादुर्भावाच्च ॥१२॥ वाते च शर्कराकर्षिणि यावत्कालम् ॥१३॥

इति प्रथमः खण्डः ।

ऊर्ध्वमाषाढ्याश्चतुरो[3] मासान्नाऽधीयीत ॥१॥ अत्यन्तं[3] शक्यं इति नियमाः ॥२॥ प्रागुज्योतिषमपराजितायां दिशि पुण्यमुपगम्य देशम् ॥३॥ अनुदित उदकग्रहणम् ॥४॥ मण्डलप्रवेशश्च "आञ्जनगन्धिमिति"[4] एतयर्चा ॥५॥ मण्डलं तु प्राग्द्वारमुदग्द्वारं वा जनाग्रीयमसम्प्रमाण-मसंबाधम् ॥६॥ आवामदेव्यमुत्तरशान्तिः ॥७॥ पुनःप्राघ्येषणं च ॥८॥ बहिर्मण्डलस्थाभिराचम्य ॥९॥ प्राधीयीरन् कृतशान्तयः ॥१०॥ शान्ति-

---

1. तु. OGN. तु. शांगृ २, १२, ८-१०; ४; ७ 2. OMS. BMS. पराभिमृष्ट 3. प्रथम खण्डस्य सूत्रमिति OGN. 4. ऋसं १०, १४६, ६ 5. तु. OEN.

पात्रोपघाते प्रोक्षणं प्रायश्चित्तिः ॥११॥ प्रोक्षणं तु हिरण्यवता पाणिना दर्भपिञ्जूलवता वा ॥१२॥ इति भाषिकम्[1] ॥१३॥

इति द्वितीयः खण्डः ।

अथ प्रविश्य मण्डलम् ॥१॥ प्राङ्मुख आचार्य उपविशत्युदङ्मुखा दक्षिणत इतरे यथाप्रधानम् ॥२॥ असम्भवे सर्वतोमुखाः ॥३॥ प्रतीक्षेरन्नुदयमादित्यस्य ॥४॥ विज्ञाय चैनं दीधितिमन्तम् ॥५॥ "अधीहि भो३ इति" दक्षिणैर्दक्षिणं सव्यैः सव्यं दक्षिणोत्तरैः पाणिभिरुपसंगृह्य पादावाचार्यस्य निर्णिक्तौ ॥६॥ अथाऽऽधाय शान्तिपात्रे दूर्वाकाण्डवतीष्वप्स्वपिन्वमानैः पाणिभिः प्राधीयीरन् ॥७॥ एष विधिर्यदि तु ग्लायेरन्नेक एषामशून्यं शान्तिभाजनं कुर्यात् ॥८॥ अध्यायाद्यन्तयोश्च सर्वे ॥९॥ तत्सन्ततमव्यवच्छिन्नं भवति ॥१०॥

## ॥ अथ शान्तिः ॥

अथ शान्तिः ॥११॥ ॐङ्कारो महाव्याहृतयः सावित्री रथन्तरं बृहद्वामदेव्यं, पुनरादायं ककुप्कारमिति बृहद्रथन्तरे ॥१२॥ दशैताः सम्पादिता भवन्ति ॥१३॥ "दशदशिनी[2] विराळिति" एतद् ब्राह्मणम् ॥१४॥

इति तृतीयः खण्डः ।

"अदब्धं[3] मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे[4] माऽमा हिंसीरिति" सवितारमीक्षन्ते ॥१॥ "युवं[5] सुराममिति" एका "स्वस्ति[6] नः पथ्यास्विति" च

1. PMS. भाषितम् 2. कौब्रा २, ३ 3. तु. OGN. OEN माश्रौ २, १, २, ३९ च
4. तैसं ३, १, १, २; माश्रौ निर्दि. स्थ. 5. ऋसं १०, १३१, ४ 6. ऋसं १०, ६३ १५–१७

तिस्र इति महाव्रतस्य[1] ॥२॥ शक्करीणां तु पूर्वम् ॥३॥ "प्रत्यस्मै[2] पिपीषते, योरयिवो[3] रयिन्तमः, त्यमु[4] वो अप्रहणमिति" त्र्यैस्तृचाः "अस्मा[5]-अस्मा इदन्धस इति, एवा[6] ह्यसि वीरयुरिति" अभितः शक्करीणाम् ॥४॥ अथोपनिषदाम् ॥५॥ यैवं महाव्रतस्य ॥६॥ संहितानां तु पूर्वम् "ऋतं[7] वदिष्यामि सत्यं वदिष्यामीति" विशेषः ॥७॥ अथ मन्थस्य "तत्सवितुर्वृणीमहे[8], तत्सवितुर्वरेण्यमिति[9]" पूर्वं च ॥८॥ "अदब्धं मन इति" आधिकारिकाः शान्तयस्ततः ॥९॥ इत्या ह्विकम् ॥१०॥ अथोत्थानकालेऽपकृष्य[10] पापम् ॥११॥ नित्यां शान्ति कृत्वा ॥१२॥ "उदितः शुक्रियं दध इति" आदित्यमीक्षन्ते ॥१३॥

इति चतुर्थः खण्डः ।

"तमहमात्मनी[11]" त्यात्मानमभिनिहितं[12] त्रिर्हितम् ॥१॥

"उप[11] मा श्रीजुषतामुप यशोऽनु मा श्रीजुषतामनु यशः ॥२॥

सेन्द्रः सगणः सबलः सयशाः सवीर्य उत्तिष्ठानीत्युत्तिष्ठति ॥३॥

"श्रीर्म उत्तिष्ठतु यशो मा उत्तिष्ठत्विति" उत्थाय ॥४॥ "इदमहं[11] द्विषन्तं भ्रातृव्यं पाप्मानमलक्ष्मीं चाऽप धुनोमीति" वस्त्रान्तमवधूय ॥५॥ "अप[13] प्राच इति" सूक्तम् "इन्द्रश्च[14] मृळयाति न इति" द्वे "यत[15] इन्द्र भयामह इति" एका "शास[16] इत्था महाँ असीति" प्राचीम् "स्वस्तिदा[17] इति" दक्षिणां दक्षिणावृतोः "वि[18] रक्ष इति" प्रतीचीम् "वि[19] न इन्द्रेति" उदीचीं सव्यावृतः "अपेन्द्रेति[20]", दक्षिणावृतो दिवमुदीक्षन्ते ॥६॥

इति पञ्चमः खण्डः ।

---

1. BMS. च तस्य 2. ऋसं ६, ४२, १-३ 3. ऋसं ६, ४४, १—३; कौब्रा २३, २; शांश्रौ १०, ६, १४; १८, १८, १९; तु. विध ५, ३८३ 4. ऋसं ६, ४४, ४—६ 5. ऋसं ६, ४२, ४ 6. ऋसं ८, ८१, २८ 7. तैआ ७, १, १ 8. ऋसं ५, ८२, १ 9. ऋसं ३, ६२, १० 10. एकादशसूत्रादारभ्य त्रयोदशपर्यन्तं पञ्चमखण्डस्यादिमं सूत्रत्रयमिति OMS. 11. स्वशाखीया श्रुतिः 12. तु. OGN, OEN च 13. ऋसं १०, १३१ 14. ऋसं २, ४१, ११-१२ 15. ऋसं ८, ५०, १३ 16. ऋसं १०, १५२, १ 17. ऋसं १०, १५२, २ 18. ऋसं १०, १५२, ३; शौसं १, २१, ३; कौसं २, १२१७; तैसं १, ६, १२, ५; तैब्रा २, ४, ७, ४; आपश्रौ २०, २०, ७; माश्रौ ९, २, ५ 19. ऋसं १०, १५२, ४ 20. ऋसं १०, १५२, ५

"सविता[1] पश्चात्तात्, तच्चक्षुरिति"[2] आदित्यमुपस्थाय ॥१॥ व्यावर्तमानश्च प्रत्यायन्त्युपविशन्ति ॥२॥ "यथाऽऽपः[3] शान्ता इति" शान्तिपात्रादप आदाय ॥३॥ पृथिव्यामवनिनीय ॥४॥ "यथा[3] पृथिवीति" अस्याऽभिकर्षन्ति ॥५॥ "एवं[3] मयि शाम्यत्वि" ति दक्षिणेंऽशे निलिम्पति ॥६॥ एवं द्वितीयम् ॥७॥ एवं तृतीयम् ॥८॥ "काण्डात्-काण्डात्सम्भवसि"[3] "काण्डात्-काण्डात्प्र[4] रोहसि" "शिवा[3] नः शाले भवेति" दूर्वाकाण्डमादाय मूर्धनि कृत्वा ॥९॥ "अग्निस्तृप्यतु"[3]। "वायुस्तृप्यतु।" "सूर्यस्तृप्यतु।" "विष्णुस्तृप्यतु।" "प्रजापतिस्तृप्यतु।" "विरूपाक्षस्तृप्यतु।" "सहस्राक्षस्तृप्यतु।" "सर्वभूतानि तृप्यन्त्वि" ति ॥१०॥ सुमन्तु-जैमिनि-वैशम्पायन-पैलाद्याचार्याः ॥११॥ पितॄन्प्रत्यात्मिकान् ॥१२॥ "समुद्र[5] व इति" अपो निनीय ॥१३॥ वामदेव्यं जपित्वा ॥१४॥ यथाकामं विप्रतिष्ठन्ते ॥१५॥

यथाऽऽगमप्रज्ञाश्रुतिस्मृतिविभवादनुक्रान्तमानाद्
अविवादप्रतिष्ठादभयं शं भवे नो अस्तु

नमोऽस्तु देवऋषिपितृमनुष्येभ्यः शिवमायुर्वपुरनामयं शान्तिमरिष्टिमक्षितिमोजस्तेजो यशो बलं ब्रह्मवर्चसं कीर्तिमायुः प्रजां पशून्नमो नमस्कृता वर्धयन्तु ॥ दुष्टुताद् दुरुपयुक्तान्न्यूनाधिकाच्च सर्वस्मात्स्वस्ति देवऋषिभ्यश्च ब्रह्म सत्यं च पातु मामिति-ब्रह्म सत्यं च पातु मामिति ॥१६॥

इति षष्ठः खण्डः।

इति शाङ्खायनगृह्ये[6] षष्ठोऽध्यायः। समाप्तञ्चेदं शाङ्खायनगृह्यसूत्रम् ॥

1. ऋसं १०, ३६, १४ 2. ऋसं ७, ६६, १६, 3. स्वशाखीया श्रुतिः 4. प्रोहन्ती इति विशिष्टः पाठभेदः। मासं १३, २०; तैसं ४, २, ९, २; ५, २, ८, ३; मैसं २, ७, १५; कासं १६, १६; शब्रा ७, ४, २, १४; आपश्रौ १६, २४, ६; काश्रौ १७, ४, १८ 5. आपमं २, ९, १४; तु. शांश्रौ ४, ११, १२
6. BMS. शाङ्खायनशाखायाः 'कौषीतकिगृह्यसूत्रे' षष्ठोऽध्यायः समाप्तः। समाप्तोऽयं ग्रन्थः। इदमेव कौशिकसूत्रम् !! LMS. इति गृह्यारण्यके षष्ठोऽध्यायः।

१, १, २ नाभा.

यत्र यस्मिन्नग्नौ अन्त्येभवा अन्त्या तां समिधमादध्यादिति अनेनाऽन्तिममग्निकार्यं लक्ष्यते, तमग्निमिन्धीत धारयेदित्यर्थः। एतद् यदि पित्रा भ्रात्राऽन्येन वा कन्याया वग्दानं कृतं भवति तदैवैतद् आधानम्, अन्यथा ब्रह्मचारिण आधानं न भवति। तथा च कारिका—

पित्रा दत्ताऽथवा भ्रात्रा वाचा चाऽन्येन यस्य तु।
कन्या भवेत्समावर्त्स्यन्नादधीत स नेतर इति ।!

कर्मप्रदीपेऽप्युक्तम् (१, ६, १३):—

यस्य दत्ता भवेत्कन्या वाचा सत्येन केनचित्।
सोऽन्यां समिधमाधास्यन्नादधीतैव नाऽन्यथेति ।।
वग्दत्ता यद्यनूढैव कन्या पञ्चत्वमापतेत्।
न त्यजेदग्निकार्याग्निं क्षिप्रमन्यां समुद्वहेत्।।
यद्यसौ न लभेत् कन्यामन्यां स्यादुत्तराश्रमी।
एहि मे प्राणमारोहेत्यात्मन्यग्निं निवेशयेत्।। इति कारिका।।

१, १, ५

पूर्वोक्तकाले यद्यग्निर्नाऽऽहितस्तदा गृहपतौ''''पितरिअकृताधानेऽपि ज्येष्ठे भ्रातरि वा प्रेते मृते सति सपिण्डयित्वाऽनुजैरविभक्तोऽपि ज्यायान् ज्येष्ठः पुत्रः स्वयमृत्विन्निरपेक्षोऽग्निमादधीत वा शब्दः पक्षान्तरैः सह विकल्पार्थः। अत्र स्वयंग्रहणात् सर्वे पाकयज्ञाः स्वयं कर्त्तव्याः प्रथम-प्रयोगे ऋत्विन्निरपेक्ष एव। यद्वा प्रेते वा गृहपतौ स्वयं ज्यायानिति सूत्रद्वयम्, ब्राह्मणक्षत्रियविशां ज्यायान् ज्येष्ठो ब्राह्मणः स्वयं पाकयज्ञान् करोति, इतरयोर्वर्णयोः पुरोहितद्वारा पाकयज्ञाः कर्त्तव्या इति, एतावदर्थमिदं स्वयंग्रहणम्। 'ज्यायान् विप्रः स्वयं कुर्यात् क्षत्रियादेः पुरोहितः इति कारिका। तत्राभ्युदयिकपूर्वकमुक्त योनितोऽग्निमानीय चतुरस्रे संस्थाप्य शतब्राह्मण-भोजनपूर्वकं कर्म समापयेत्। सायंवैश्वदेवहोमयोः पूर्ववज्ज्ञेयम् शान्ताग्नौ पुनराधाननिमित्ते च पूर्ववद्भवति प्रेते वा गृहपतौ परमेष्टिकरणमिति छन्दोगगृह्ये।

१, १, ८

पुरवो बहवः पशवो ययोस्तौ ब्राह्मणक्षत्रियौ तथा विट्-कुलमपि। केचित् पुरुपशुविट्-कुलमित्येकाऽधिकरणं विशेषणंवदन्ति, तद् युक्तं न भासते। तन्त्रान्तरेऽपि श्रूयते 'ब्राह्मणक्षत्रियवैश्-येभ्यो धनवद्भ्यश्चाग्निराहरणीय इति तथा छन्दोगगृह्ये "अपि वा बहुयाजिन एवागाराद् ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्प वः" इति। तस्माद्भिन्नाधिकरणमेव युक्तम्। कारिकामते तु भिन्नमेव। ब्राह्मणक्षत्रियवैश्येभ्यो वित्तवद्भ्योऽग्निमाहरेदिति।

१, १, ६

एके आचार्याः सायन्तने होमकाले प्रातस्तने च होमकाले स्वयोनितोऽग्निराहरणं वदन्ति··· तत्र मातृयागपूर्वकमाधाननिमित्तमाभ्युदयिकं विधाय स्वयोनितोऽग्निमानीयचतुरस्रे स्थाप्य तण्डुलादीनां वैश्वदेवार्थे पाकं विधाय वैश्वदेवहोमयोरर्थे एकमेव आभ्युदयिकं विधाय वैश्वदेवं निर्वर्त्याग्निमुत्सृजेत्। एवं सायं स्वयोनित आनीय स्थण्डिले स्थाप्य सायन्तनं होमं हुत्वा वैश्वदेवं च कृत्वाऽग्नेरुत्सर्जनं कुर्यात्। एवं प्रातरपि···। एवं दर्शपौर्णमासे देवानां यजनं व्रताशनं पिण्डपितृयज्ञोप्येवमेव।

१, १, १०

केचन आचार्या आहृतस्याग्नेः सायङ्काले आहुतिभिः संस्कार अध्वर्यु प्रत्ययः अध्वर्युतः प्रत्ययः प्रत्येतव्य इति वदन्ति। इदमाधानं द्व्यह-साध्यम् : अन्यद् आधानं सद्यस्करम्। सच संस्कारप्रकार विधिः अध्वर्यु कल्पतो विशदः क्रियते। पूर्वमध्वर्यु वरणमागारकरणं क्षौमधारणं पुरुपश्वादियोनितो अग्ने राहरणम्। तस्मिन्नहन्यनशनमुपास्तजपो न भवति।

१, १, १२

तस्योपासनीयस्यऽाग्नेः (तु. शांश्रौ २. ६. २) प्रादुष्करणकालः प्रकाशनकालः।

१, २, ४

एकत्र श्रुतगुणा एव भवन्ति। एकत्र वाग्रूपगुणा भवन्ति। तत्र सर्वान् गुणान् परित्यज्य श्रुतवानेवादरणीयः। यतः श्रुतं सर्वमतीत्यानुवर्तते। 'श्रुतवन्तं नापक्रमेदिति' आपस्तम्बः।

१, ३, ३

पूर्णविघनं पूर्णेन विघनं विशदं प्रसिद्धम् चरुम् तु. काश्रौ. (४, १, ५-७)

१६

प्रागाहुतेः पूर्वाहुतेः पाक् पूर्वम्। एके आचार्याः आदेशमात्रां समिधं-समिद्धोममिच्छन्ति।

१७.

परिसमुह्य, होष्यन् 'ऋतं त्वा सत्येन परि सिञ्चामीति त्रिस्त्रिरेकैकं पर्युक्ष्य हुत्वा च 'सत्यं त्वर्तेन परि षिञ्चामीति प्रातरिति सूत्रितं (शांश्रौ २, ६, ६-११) तथा इहाऽपि द्रष्टव्यं कल्पैकत्वात्। आधानोत्तरं द्वादशरात्रं स्वयं होमः पर्वणि च। द्वादशरात्रं स्वयं होमी स्यात्।

१, ४, १

प्रातः ब्राह्मे मुहूर्ते उत्थाय शौचाचारादिक्रियां निर्वर्त्य विधिपूर्वकमाचम्य अहरहः प्रतिदिनं स्वाध्यायमधीयीत पठेत्···असंयुज्य विधीयमानत्वाद् ब्राह्मणक्षत्रियविशामिदमध्ययनम्। किमध्ययनमित्यत आह।

रामपृ.

अथ शयनादुत्थितस्य अशान्तस्य होमात् प्रागेव प्रबुद्धमात्रस्य प्रातर्जपस्त्रैवर्णिकः। स्वाध्यायं दिने-दिने यथाशक्ति प्रातस्तरां पटेत्, ततः 'अद्या नो देव सवितः' इतिद्वे, 'अपेहि··· स्वस्ति नो मिमीताम्'। इति पञ्चेति स्वाध्यायान्तरं सप्तत्रिंशद् ऋचश्चाऽवश्यं पाठ्याः (?)

१, ४, २

चकाराद् आयुष्कराणि 'आ नो भद्रा (१, ८९) ईत्यादि जप्यानि। अथवा च शब्दो ब्रह्मयज्ञानुकर्षणार्थः : स च ब्रह्मयज्ञः प्रातराहुतेः पश्चात्तर्पणादर्वाग्वैश्वदेवान्ते वा कर्तव्यः।

१, ५, ७

यस्याः कन्यायाः अभ्यात्मम् आत्मानं हृदयम् अभिलक्ष्यीकृत्य······

आत्मशब्देन हृदयं यतस्तत्राऽनुभूयते।
हृदयाऽभिमुखानीव यस्या अङ्गानि गुप्तितः॥
'कन्धरानाभिरङ्गाष्ठावुत्तरोष्ठश्च नासिका' इति | कारिका।

१, ५, ८

तथा यस्याः केशान्ताः केशनामन्ता अग्राणि समा अकुटिला यस्याः सा तामुद्वहेत्।

१, ५, ९

ग्रीवायामावर्तौ भ्रमरौ प्रदक्षिणौ प्रादक्षिण्येन।

१, ६, २

कन्यावरणार्थं गमनविषये पुष्पाणि मल्लिकादीनां स्रजः। फलानि नारीकेलप्रभृतीनि ······वरपित्रादयो गच्छन्तीति वाक्यशेषः।

१, ६, ३

'वरपित्रादयः साचार्याः कन्यादातृगृहं गत्वा मण्डपे स्थित्वा' इति त्रिः कथयन्ति।······ उच्चैर्न्यायश्चर्ग्वेद 'इत्युक्त्वादुच्चैः कथनम्' दूरादाह्वाने टेः प्लुत उदात्त इत्युदात्तत्वात्।

१, ६, ४

उत्तरां दैवे प्राचीमेवैक इति वक्ष्यमाणस्य (१, ७, ४; ५) निषेधमाह। ततः कन्या—पक्षीयैरस्मत्कन्या भवद्वराय देयेति उदिते उक्ते सति गृह्या गृहेभवा गृह्याः कन्यापक्षीयाः सर्वेपि बालवृद्धसहिताः प्राङ्मुखा उपविशन्ति।

१, ६, ६

आचार्यः ( वरपक्षाचार्यः ) प्रत्यङ्मुखः······कन्यायाः प्राङ्मुख्या मूर्धनि······पूर्वोक्तां तां पूर्णपात्रीम् 'आ नः प्रजाम्' इति मन्त्रेण करोति स्थापयति, 'तथा प्रजां पशूस्तेज इत्यादिभिस्त्रिभिर्यजुभिर् असंधितैस्तथैव मूर्धनि कन्याया आचार्यः करोति।

१, ७, ३

दक्षिणान्यायानि पित्र्याणीत्य ( श्रौ. १, १, १४ ) स्याऽपवाद माह······पूर्वदक्षिणा च पूर्वोत्तरा च पूर्वे विदिशौ तयोः आग्नेयी ऐशानी च तयोर्या दक्षिणा पूर्वाऽग्नेयी तां पित्र्ये कर्मणि मासि-मासि पितृभ्यो दद्यादित्यादौ प्राचीं पूर्वां कल्पयेत्। आग्नेय्यां पितृकर्माणि विधेयानीत्यर्थः।

१, ७, ४

प्राङ् न्यायानि देवकर्माणीत्य ( श्रौ. १, १, १३ ) स्याऽपवादमाह······पूर्वयोर्विदिशो र्या उत्तरा ऐशानी तां दैवे कर्मणि होमादौ प्राचीं कल्पयेत्।

१, ७, ५

एके आचार्या दैवे कर्मणि प्राचीमेव प्राचीमिच्छन्ति ।

१, ७, ६

स्थण्डिलमध्ये उदक् संस्थानं स्थितिः यस्याः सा तां लेखां लिखित्वा प्रादेशमितां खड्गेन साग्निकानां निरग्नीनां स्रुवेण······कारिका :—

उदीच्यामुपरिष्टात् स्युः सर्वाः प्रादेशसम्मिताः ।
स्फ्येन समास्तु तत्र स्फ्यलेखाः स्युस्तस्य दर्शनात् इति ॥

१, ७, ६-७ रामप.

तन्मध्ये दक्षिणत उदीचीं सरलां कुशमूलादिना लेखां लिखति । तस्य दक्षिणभागत उदक्-संस्थतया तां भिन्दन्नेव तदुपरि प्राचीः तिस्रोऽन्या लेखा लिखति, तासु प्रथमतृतीये दक्षिणतो ( दक्षिणोत्तरतो ? ) द्वितीया मध्ये स्यात् ।

१, ७, ७

तस्या लेखाया उपरिष्टाद् उपरिभागे, दक्षिणतः—दक्षिणत आरभ्य ऊर्ध्वं पश्चाद् आरभ्य प्राक्संस्थां रेखां कुर्यात्, ततस्तथैव मध्ये एकां तथैवोत्तरत एकां लेखां लिखित्वा; एवमुक्तप्रकारेण उत्तराग्रामेकां लेखां कृत्वा तदुपरि प्रागग्रं प्रादेशमितं लेखात्रयं कुर्यात् । ततस्ताभ्यो लेखाभ्य एकैकशः 'प्रासून प्राञ्चं समुद्धृत्य ताभ्यएकैकशः क्रमात्' इति कारिका ।

१, ८, १-६

सव्येन कुशानादायेति स्तरणशेषापदेशाद् ब्रह्मणि स्थापिते स्तरणं भवति न ब्रह्मणः (६) ब्रह्माणं पञ्चाशत्कुशनिर्मितम् (६) दक्षिणेन हस्तेन अपनीय स्तृणुयात् । एवं द्वितीयादिकं भागं स्तृणुयात् ।

रामप. १, ८, १-११

ततः सर्वार्थकुशपुष्पप्रणीतापात्रस्तरणकुशहविद्र्व्यपवित्रच्छेदनपवित्राज्यस्थालीकुशमुष्टिस्रुवसप्तदशेध्मसमिधत्रयानि उत्तरत उपस्थापयेत् तत्तत्कर्मस्वपेक्षितद्रव्यान्तरं च । ततो दक्षिणतो ब्रह्मासनं कुशोत्तरमुत्तरतस्तु प्रणीतार्थमासनं कुशोत्तरं दद्यात् । ततः कुशमयं ब्रह्माणमुत्तरतो वृत्वा ये ( थ ? ) पुरस्तान् नीत्वा दक्षिणतः कृत आसने भू र्भुवः स्वरिति प्रतिष्ठापयेत् तं च पुष्पैर् अलंकुर्यात् । ततः प्रणीतापात्रं सोदकं कृत्वा प्राञ्चं दर्भासने 'को वः प्रणयतीति' मंत्रेण प्रणयति । ततः परिस्तरणम् । यथा सव्ये पाणौ स्तरणयोग्यपृथक्कृतपत्रकुशमुष्टिम् आदाय दक्षिणं जान्वाच्य दैवे पित्र्ये तु वामम्, दक्षिणकरेण कुशान् आकर्षन् प्रागग्रैस्तैरुदगपवर्गतयाग्नेः पुरस्तात् स्तृणाति, पुनरग्रै स्तृतकुशमूलान्याच्छादयन् तत्पश्चात् स्तृणाति, पुनस्तथैव तृतीयमिति त्र्यावृत्पक्षे तु तथैव पञ्चवारम् ।

१, ८, २४-२८

आज्योत्पवनानन्तरं स्रुवे आपः उदकानि स्थापनीयानि तत्र···स्रुवस्थितानामपाम्··· उत्पवनं करोति । (२५) तच्छब्दो यच्छब्दमपेक्षते । याः पूर्वं स्रुवे आपः प्रणीतास्ताः प्रोक्षणीः

प्रोक्षणीसंज्ञका ज्ञेयाः । यदि प्रमादाद् एकस्यापि पात्रस्य प्रोक्षणविस्मरणे प्रणीतास्थोदकेन प्रोक्षणं विधेयम्, एतदर्थं प्रोक्षणीः संज्ञोक्ताः ।

रामप. १, ८, २४-२५

ततः स्रुवे अपः कृत्वा ता अपि आज्यवत् पवित्राभ्यामुत्पुनाति······ततस्ता अपोऽल्पाः प्रणीतासु अवनीय शेषिताभिः प्रोक्षणीनामिकाभिर्हविरिध्मं बर्हिश्च प्रोक्षति । ततोऽग्निसमेधनार्थानामिध्मानां दृष्टार्थतयाग्नावभ्याधानम् ।

१, ६, २-१६

स्रुवादीनां यानि लक्षणानि चिह्नानि परिमाणादीनि यथा यस्य पदार्थस्यार्थः प्रयोजनं तस्य ग्रहणम् अर्थात्—वेदितव्यम् । यत्र यस्य यादृशोऽर्थस्तत्र तस्य तादृशं परिमाणादि विधेयम् (१२) एतदुक्तमावापस्थानं महाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यान्तरं भवति महाव्याहृतयश्च प्राजापत्यं च तेभ्यः अन्तरं वहि र्बाह्यमित्यर्थः । (तु० पा १, १, ३६) तेन एतदुक्तम्भवति । आज्यभागौ ततः प्राधानाहुतयः, ततः स्विष्टकृद् 'अग्नये स्विष्टकृते स्वाहेति, ततो महाव्याहृतयश्च चतस्रः 'भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहाः भूर्भुवः स्वः स्वाहेति, ततः सर्वंत्ताहुती भूर्भुव स्वः स्वाहा । अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वम् अया असि । अयासा मनसा कृतोऽयासं हव्यमूहिषे । 'अया नः कृणुहि भेषजं स्वाहेति ( तु. श्रौ. ३, १६, ३ आश्वौ० १, ११, १३ काश्रौ० पृ. १०५४ F) सर्वं°त्ताहुती, ततः प्राजापत्या प्रजापतये स्वाहेति प्राजापत्या । एताभ्य आहुतिभ्यः प्रधानाहुतयो बाह्या इत्यर्थः । एताः सप्ताहुतयश्च चरुहोमान्ते आज्यहोमान्ते च भवन्ति ।

(१७) यथा पूर्वमुक्तं कुशतरुणाभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्ष्येति ।

१, १०, ३

आचार्यायाग्नये ऋत्विजे बार्हस्पतय इत्येवमादिकानां इयमेव प्रकृतिः ।

१, ११, १-५

अथेन्द्राणीकर्मोच्यते विवाहाङ्गम्। (४) स्त्रीणां मन्त्रे अनधिकाराद् आचार्यः करोति······राज्ञे प्रत्यानीकायेति, एतदेकमेव पदम्, न पदद्वयम् (पदद्वयं वा) प्रत्यानीकगुणविशिष्टाय राज्ञ इत्यर्थः । (५) सुराशब्दसंयोगाच्च शूद्रस्त्रियः, शाकपिण्डीभिः शाकैर्मादकः (मोद?) पिष्टपिण्ड्यस्ताभिः, सुरया पैष्ट्यादिकया, अन्नेन पायसादिना मादकेन (मोद °?)

१, १२, ४-१०

वरः अञ्जनकोशस्येदम् आञ्जनकोशम् । ·······कन्यायै, आदत्ते-गृह्णाति । (१०) वरस्य कौतुकागारगमनाद् ऊर्ध्वं कन्यादाता मधुपर्कं करोति, कौतुकगृहान् निःसृतस्य जामातुः श्वशुरेणार्घः कर्त्तव्योऽस्मिन् क्रमे सूत्रारम्भात् । स विधिः षड् अर्घ्या भवन्तीति-अस्मिन् खण्डे कल्पे उक्तः । विवाहे गाम् अर्हयित्वा पूजयित्वा माता रुद्राणाम् (८, ६०, १५) इत्यृचं जपित्वा गृहेषु परिणीयागतेन मधुपर्कसम्बन्धिनीं गामर्हयति पूजयति तत्राचार्यो मधुपर्केणार्घमस्य वरस्य करोति । ते गावौ मधुपर्किक्यौ मधुपर्कसम्बन्धिन्यौ भवतः ।

रामप.

त्यागपक्षे सा गौर्विवाह्य गृहमागताय चाचार्येणास्मै अर्घः कार्यः। तत्र लब्धा च गौर्वरस्यैव भवति।

१, १३, ४-६

( तु. शौसं. १४, २, ७१ ) अस्मिन्नवसरे चत्वारो द्विजाः सूर्यां ( ऋसं. १०, ८५ ) कन्यायै श्रावयेयुः शिष्टाचारात्, (६) स आचार्यः पुन्नाम्न अश्वत्थादेर्वृक्षस्य सक्षीरान् सदुग्धान् सपलाशान् सपल्लवान् कुशान् दर्भान् अोप्य प्रक्षिप्य।

रामप.

पुन्नाम्नो वृक्षस्याश्वत्थोदुम्बरादेः सक्षीरस्य नवपल्लवान् सकुशान्।

१, १३, १०

उदकुम्भमित्यारभ्य अश्मन स्थापनान्तमाचार्यकर्तृकम्। इति उत्तरमाचार्यः कारयति वरं वक्ष्यमाणम्, (१४) रैभ्यासीदित्यनेन।

१, १४, ५-१६

पदाक्रमणाद्याचार्यः कारयति, (७ रामप. वरो.......आचार्यो वा) (८) कन्यावरयोर्मार्जनमाचार्यः कृत्वा ( रामप. ततो वरः ) (९) कन्याया वरस्य च मूर्धनि मस्तके आचार्योऽभिषेचनं करोति वतो मूर्धनीत्येकदेशे सप्तमी। (१६) गौरित्यनुवर्तते दुहितृमते अभ्रातृमती पित्रेऽधिको रथो यस्मिन् तद् गवां शतं दद्याद् अभ्रातृमतीविवाहदोपनाशार्थम् तामभ्रात्रीमुपयृच्छेत्तत्तोकं ह्यस्य तद्भवति निरुक्ते निषेधात्। (तु. नि ३, ५)

१, १५, २-१२

हावकः.......जपेत् ( रामप. आचार्यो जपेत् ) (६) शम्यागर्तेपु शम्यार्थं कृतेपु गर्तेपु (७) नित्या युगस्था एव या पुरातना शम्या (१२) तद्रथाङ्गसंस्कारानन्तरं स्वस्ति न इति स्वस्त्ययनं मार्गे कल्याणाय जपति।

१, १६, ७

अत्र सर्वत्र मन्त्रलिङ्गाद् वरस्यैवं मन्त्रजपो नाचार्यस्येति ज्ञायते।

१, १७, १ रामप.

वध्वा अपि मन्त्रः। ( ८ प ) वर एव जुहोति पत्नी तूपतिष्ठते। ( ९ प ) इति सैव जुहोति, स्विष्टकृदादि तु वर एव।

१, १९, १-४

अध्याण्डा पर्णफलिनी..........एतत् कर्म भर्तैव करोति नान्यः पुंजननसंस्कारत्वात्। (४) अनुप्राणनं कुर्यात् जायायामुच्छ्वासं निक्षिपेदित्यर्थः।

१, २०, ३-५

न्यग्रोधस्य वटस्य स्कन्धस्य मध्यशाखाया अन्त्यां शुङ्गामन्त्योऽङ्कुरस्तस्य मूलं वा

पेषयित्वा । लताग्रपल्लवो बुघ्नः शुङ्गेति परिकीर्त्यत इति कात्यायनः (कर्मप्रदीपे ३, ६, ६)··· अग्निर् आहवनीयस्तस्याभिमुखां त्वचम्·······(५) एतत् कर्म भर्तृकर्तृकं गर्भसंस्कारत्वात् ।

१, २१, १

गर्भरक्षणकर्मापि रक्षणार्थं न तु संस्कृतिरिति कारिका ।

१, २२, ३-८

भर्ता······श्रपयित्वा·······हुत्वा । (८) त्रिःश्वेता त्रिषु स्थानेषु श्वेता······ उदुम्बर-शलाटुभिः अपक्वोदुम्बरफलैः सह सार्धं मध्यान् नाभिप्रदेशाद् ऊर्ध्वं सीमन्तं केशान्तं यावदुन्नयति ।

१, २३

काकादनी काककदली प्रसिद्धा, मेचकताटिनी पंपोटीति लोके प्रसिद्धा, कोशातकी घोषावती, बृहती प्रसिद्धा कालङ्कीतकं काञ्चिघेसलिकेति (कालीङ्करु लोकेति) प्रसिद्धम् । रक्षसां नाशनार्थम् उपलेपनम् एतन नतु गर्भस्य संस्कारः ।

रामप.

काकादनी नामेन्द्रवारुणीभेदो बृहदारक्तफलः, मचकचातनीनाम पटोली, कोशातकी नाम देवदाली, बृहती नाम कण्टकारी, काङ्कीतकं नाम कालघोरुकेति प्रसिद्धम् ।

१, २४,१-१२

(१) एतस्मिन्नेव सूतिकाग्नाविति वक्ष्यमाणत्वात् सूतिकाग्निस्थापनम्, तत्र होमः । (२) अभ्यवान्यावघ्राय अनुप्राण्यात्, अनुप्राणनं मन्त्रेण ऋचेऽस्यादिना त्रिः, आघ्राणममन्त्रकम् ।

(५) त्रिस्तूष्णीमवजिघ्रेत्, अथ ऋचा प्राणीहीत्यनुप्राण्यात् (७) मषं मृष्टानि कारयित्वा । (१२) आ उत्थानाद् यावत् सूतिकागेहान् निःसरति तावद् बध्वा ।

१, २५, १-७

उत्थानं सूतिकाया इति शेषः, (४) एतस्मिन्नेवेति ज्ञापकात् पूर्वं सूतिकागृहेऽग्नी रक्षणार्थं धारयितव्यः, तत्रैव जातकर्म विधेयम् । (७) आयुष्ट इत्येका आयुर्दा इत्येका । तु. आश्वो (२, १०, ४)

१, २६

अग्नय इत्यादिकं क्षेपकमपि खण्डं देवताज्ञानाय व्याख्यायते ।

१, २८, ७

आनडुहं रोहितं चर्म·······गोमयं च तस्यैवानडुहश्चकारात्, अनन्तरं कुशभित्तं समूलं कुशम्·······।

रामप.

आनडुहं चर्म···गोमयं कुशखण्डं न केशग्रहणाय आनडुहं गोमयम्··· ।

२, १, २१

प्राणो वायुः, तस्य निर्गमनस्थानं नासिकाग्रम्, तत्संमितो ब्राह्मणस्य दण्डः कार्यः । न तु प्राणमात्र एव । संमातुमशक्यत्वात् ।

२, २, ३

अजिनमन्त्रमाह माध्यन्दिनगृह्ये मित्रस्य चक्षुर''''दधेऽहमिति अनेन मन्त्रेण माणवकस्य वामस्कन्धे अजिनं मेखलौपवीतपूर्वकं धरयति ।

२, २, ६-११

समानार्षेयो भवानु ब्रूहीत्याचार्यो वदति । अत्र भवानु ब्रूहीति ब्रह्मचारी भवान् ब्रूहीत्यतः सिंहावलोकनन्यायेनात्रानुपज्यते । (११) दक्षिणोत्तराभ्यां दक्षिण उत्तर उपरि ययोऽस्तौ ।

२, ३, ५

आचार्यो ब्रह्मचारिणो हृदये''''हस्तं निधाय ।

२, ४, २

काम इच्छा, सा (सद्) गुरोः शिष्यस्य वा आचार्याधीनं तदित्युक्तत्वाद् आचार्यस्यैव । संवत्सरत्रिरात्रान्वक्षादीनां वक्ष्यमाणकालानामन्यतरस्मिन् काले ब्रह्मचर्यस्य असाविति सम्बुद्धयन्तं माणवकनाम गृह्णीयात् मम व्रत इति मन्त्रान्ते । ब्रह्मचर्यशब्दो विशिष्टाचारयमनियमादिसमूहवाचकोऽपि तदात्मकेषु पञ्चसु व्रतेषु सावित्र-शुक्रिय-शाक्वर-व्रातिकौपनिषदेषु द्रष्टव्यः तेषु शाक्वर-व्रातिकौपनिषदानि त्रीणि व्रतानि वक्ष्यमाणकालानि सांवत्सरिकानि शाक्वरं तु संवत्सरं व्रातिकमौपनिषदं चेति वक्ष्यमाणत्वात् शुक्रियमाचार्येच्छया सावित्रं विकल्पत्रययुक्तं संवत्सरे सावित्रीमन्वाह त्रिरात्रे अन्वक्षं वेति वक्ष्यमाणत्वात् । तदर्थमिदं कामस्य ब्रह्मचर्यस्येत्युक्तम्, अयमर्थः नियुनक्तु मह्यं सावत्सरिकस्य त्रैरात्रिकस्य वा ऽऽन्वक्षिकस्य वा सावित्रस्य ब्रह्मचर्यस्यामुकामुकशर्मन्निति वाक्यसंयोगो ज्ञेयः ।

२, ५, ६

अध्यासीनो दिशमेकां प्रशस्तां प्राचीमुदीचीमपराजितां वा । एकः श्रोता दक्षिणतो निषीदेदिति (ऋप्रा. १५, २) एतन्निषिध्यतेऽनेन सूत्रेण ।

२, ७, ६-२७

हस्ताभ्याम्'''कुशानु मध्ये मध्यदेशे माणवकः परिगृह्य । (१०) तत् सवितुरित्यृचम् (ऋसं ३, ६२, १०) इत्यर्थः । ब्राह्मणस्य एतत् सावित्रीप्रशंसात्मकोऽनुवादः । क्षत्रियवैश्ययोस्तु ऊहः कर्त्तव्यः शब्दविकाररूपः, शब्दविकारमूहं ब्रुवत इति (श्रौ. ६, १, ३) कल्पोक्तेः । त्रिष्टुभं भो३ अनुब्रूहीति इतरः, त्रिष्टुभं तेऽनुब्रवीमीत्याचार्यः''''हैरण्यस्तूपीं भो३ अनुब्रूहीतीतरः । हैरण्यस्तूपीं तेऽनुब्रवीमीत्याचार्यः (ऋसं. १, ३५, २) इति क्षत्रियस्य । जगतीं भो३ अनुब्रूहीतीतरः जगतीं ते अनुब्रवीमीत्याचार्यः हैरण्यस्तूपीं भो३ अनुब्रूहीतीतरः हैरण्यस्तूपीं ते अनुब्रवीमीत्याचार्यः (ऋसं. १, ३५, ६)''वामदेवीं भो३ (ते) अनुब्रूहीतीतरः, वामदेवीं ते अनुब्रवीमीत्याचार्यः (ऋसं. ४, ४०, ५) इति वैश्यस्य । (१९) अपि वेति पक्षान्तरे । आचार्यो मन्त्रगतान्यृषिदैवतच्छन्दांसि अविदनु अजाननु प्रतिदिनं समाप्ते परिसमाप्तेऽनुवचने यथाभिल-

पिते तत् सवितुरित्येतामृचम्······आह । ततः एषेंति गायत्री एव स्वरूपेण निर्देशयति, एषैव गायत्री ऋक्पच्छः प्रयोगे त्रिपदा, तथा एषैव अर्धचंशः प्रयोगे द्वयवसाना प्रथममर्धर्चान्ते द्वितीयं तृतीयचरणान्ते, तथा एषैव अवसानरहिता, चरणत्रयान्ते चतुर्विंशत्यक्षरान्ते अवसानं विधेयम् । एवं सावित्रीं ते अनुब्रवीमीति गायत्रीं ते अनुब्रवीमि वैश्वामित्रीं ते अनुब्रवीमीति गायत्रीमात्रे प्रयुक्ते सर्वस्य वेदस्य राशेरेतन्मयत्वात् सर्वज्ञानं भवतीत्यभिप्रायः ।······एषा सावित्री गायत्री वैश्वामित्री ऋगिति द्वितीयः । (२६)······अनेन प्रकारेण सूक्तस्यादिभूता एषा ऋक्तत् प्रभृति इदं सूक्तम् एतत् प्रकारमिदं सूक्तम् । (२७) एतद् यद् अनुवाचनं व्याख्यातं तद् ऋषिस्वाध्याये मन्त्रसंहितायां ज्ञेयम् ।

२, ६, १,

समित्पाणिः संयत्पाणिर्नित्यं प्रत्यहम्······अन्वष्टमदेशमष्टमदेशमनु ऐशानीं दिशमनु लक्षीकृत्य ।

२, ११, ६-१३

आचार्योऽहोरात्रं ब्रह्मचर्यं मैथुननिवृत्तिमुपेत्य संपाद्य अमांसाशी मांसाशनरहितः पूर्वदिने कर्मदिने च, अहोरात्रं ब्रह्मचारी अमांसाशी च भवेत्, तत्र व्रतादेशनं करोति ।

( ६ ) शुक्रियशब्दोऽत्राध्ययनवाची, तत्संबन्धेनेदमपि व्रतं शुक्रियमुच्यते, त्रिशुक्रियो ब्रह्मा यस्योभयतः श्रोत्रियास्त्रिपुरुषमिति सूत्रे (श्रौ १६, २२, २६) श्रुतिश्च । स शुक्रस्य तन्वो वेद तिस्र इति ।

(१३) रहस्यं श्रावयिष्यन्निति विशेषणं शाक्वर-व्रातिकौपनिषदानामादेशेन वक्ष्यमाणेन यथायथं कालं कर्मणो विमोकादिकं नियमं च उद्दीक्षणिकायां वाग्यमादिकं प्रतीयेत जानीयाद् ब्रह्मचारिणः ।

२, १२, ६-१०

आदेशेन प्रतीयेतेत्युक्तं प्राक् (२, ११, १३) तद् आह आचार्यो ब्रह्मचारिणमादिशति त्रिरात्रम्······देवकुले देवतायतने अग्निहोत्रेऽन्यगारे······, एतस्य कर्मण उद्दीक्षणिकेति संज्ञा लोके । (६) एतान् वक्ष्यमाणान् अनध्यायान् अनध्यायरूपान् नेक्षेत नावलोकयेत् । (१०) स्वस्यवासान् निवासस्थानान् निरसन् निर्गच्छन्······सर्वाणि शवरूपाणि च नेक्षेत । लोके सिंहसर्पादीनि शवरूपाण्युच्यन्ते । तेषां सर्पाणां मध्ये यानि आस्येन मुखेन प्रविशेयुर्बिलं तान्यनध्यायरूपाणि नेक्षेत । अन्ये तु शवशब्दं मृतमनुष्ये वदन्ति, तदा तद्रूपाणि श्वशृगालादीनि, तेषां दर्शने चानध्यायः । यान्यास्येन प्रविशेयुरिति उक्तत्वात् सिंहव्याघ्रादिदर्शने चानध्यायः, ते तु मुखैः कृत्वा बिलं प्रविशन्ति ।

रामप.

शवं तद्बोद्द (ध्र ?) सिंहसर्पादिर्हिंस्राश्च च ये च मुखेन बिले विशेयुस्तान् न पश्येत् । अन्य आहुः नखशृङ्गमलादीनि देहाद्रिनानि (देहाद् भिन्नानि ?) शवरूपाणि, तानि नेक्षेत ।

२, १३, ८

न हि ते क्षत्रमित्यनया (ऋसं १, २४, ६) जुहुयात्······, वेदानां रसभूतेन प्रणवेन।

२, १४, १-२१

अथेत्यनेन गृहस्थोऽधिक्रियते·······वैश्वदेवाधिकारी स्यात् गृहस्थः सह भार्ययेति कारिका। ब्रह्मचारिप्रकरणे असमाप्ते वचनम्। कार्यादिना प्रोषितस्याचार्यस्य पितु र्वाल्प-त्रिद्यत्वाद् ब्रह्मचारी तदीयं वैश्वदेवं कथं कुर्यादिति अत आह। (२) अग्निकार्यप्रकरणे यो होमकल्पः परिसमुह्य पर्युक्ष्य दक्षिणं जान्वाच्येत्यादिकः (२, १०, ३) संनिकृष्टत्वादिह ज्ञेयः। व्याख्यातः प्रतिश्रुते होमकल्पः (१, ६, १६) इत्युक्ते प्रतिश्रुता विधानं प्राप्नोति तन्निवृत्यर्थं व्याख्यातो होमकल्प इत्युक्तम्। (८) गृह एव आदित्यमण्डले आदित्यमण्डलरूपे मण्डलाकारे। (२१) सौवासिनीं स्वगृहे स्थिताम् अविधवां पुत्र्यादिप्रभृतिकां स्त्रियम्। गर्भिणीं गर्भयुक्तां प्रियं, कुमारान् आमौञ्जीबन्धनात्।

२, १५, ८-१०

प्रियाय जामात्रे। (१०) अन्य आचार्यश्वशुरराजस्नातकजामातरः संवत्सरं सत्कृतेना-(सकृत्-कृतेना ?) घर्येण कृतार्घ्या भवन्ति, संवत्सरानन्तरमर्घ्ययोग्याः।

२, १६, ३

एकग्रामीणमेकग्रामस्थितमतिथिं न विद्यात् जानीयात्। तमप्येकग्रामीणं विप्रोष्य विशेषेण प्रवासं कृत्वा आगतं गृहे अतिथिं विजानीयात्। पुनः कीदृशम् ? गृहे उपस्थितं समागतम्, न मार्गे मिलितम्। गृहशब्दस्य विवरणम्: यत्र गृहे वनस्पतौ (?) वा भार्या कलत्र-मपि वा अग्नयो अग्निहोत्रस्य यत्र, तं गृहं न निवासस्थलमेव।·······जायेदस्तं मघवन्से-दुयोनिरिति श्रुतिः (ऋ ३, ५३, ४) अतिथिरभ्यतितो गृहान् भवत्यभ्येति तिथिषु परकुलानीति वा गृहाणीतिवेति नैरुक्ते।

रामप.

अतिथिश्चैकग्रामस्थो न भवति, देशान्तरं गत्वा समागतस्त्वेकग्रामस्थोऽप्यतिथिः। आतिथेयं च यत्र भार्या यत्राग्नयस्तत्र पाल्यते, न तु प्रवासादौ।

३, १, ८, १२

शिरोवेष्टनं बध्नाति। (११) आचार्यो माणवकाय·······आदत्ते प्रयच्छति। (१२) प्रतिलीनो गुप्तवृत्त्यातिष्ठेत् न वृथा पर्यटनं कार्यम्।

३, २, ५, ६

द्वारिभवौ द्वार्यौ, तयोर्दक्षिणे·······पूर्वस्यां दिशि। (६) पूर्वस्यां दिशि उत्तरतो द्वितीये गर्ते (८) मध्ये वर्तमाना स्थूणा स्थूणाराजः सकलगृहस्य भारक्षमत्वात्। (६) एनं कुमार इत्य आरभ्य स्तभायेत्यन्तेन षडवसानयुक्तेन मन्त्रेण स्थूणाराजं मध्यस्तम्भम् अभिमृशति। तस्य संस्पर्शनं करोति।

३, ४, १

वास्तोष्पतीये गृहप्रवेशाख्ये कर्मणि विधिं व्याख्यास्याम इति वाक्यशेषः।

३, ५, २-३

अरिक्तो न रिक्तः समित्पुष्पकुशादिसहितः। (३) (तु० आश्वश्रौ २, ५, १७)

३, ६, १

(घोषिण्य इत्यनेन वायवोऽभिप्रेयन्ते) तु० श्रौ ४, १६, ६ रुद्रसेनाभ्योऽनुदिशति, आघोषिण्यः प्रतिघोषिण्यः संघोषिण्यो विचिन्वत्यः श्वसनाः क्रव्याद एष वो भागस्तं जुषध्वं स्वाहेति।

३, ११, ८-६

स्वपरिमाणेन शोभया वा छादयति अधःकरोति। (६) यूथः वत्सरीवर्गोऽयं वृषभं छादयेत् वल्लभतया आवृत्य तिष्ठति। तं वा वृषभमित्यलंकृत्येति पूर्ववत्।

३, १२, ३

अनादिष्टदेवतात्वात् मन्त्रगता उषा देवता। तत्र ग्रहणासादनप्रोक्षणेषु उषसे जुष्टमिति सर्वत्र।

३, १३, १-५

मार्ग(शीर्ष) पौषमाघस्थानां तिसृणामष्टकानां मध्ये या मध्यमा पौषकृष्णाष्टमी तस्याम् ......अनन्तरं मध्यावर्षे वर्षस्य मध्यं मध्यावर्षम्; चैत्रादो द्वादशमासात्मकं वर्षं भवति; तन्मध्यस्थो भाद्रपदो मासः षष्ठो भवति, तस्य कृष्णाष्टम्या अपराह्णे पितृयज्ञेन चरन्तीति श्रुतेः (कौषीतकि ब्राह्मणम् ५, ६) तयो र्मध्यावर्षमध्यमाष्टकयोः समानधर्मत्वात् सहकथनम्। (२) अनयोरष्टकयोर्गोपशुर् अजपशुरिति पक्षावग्रे वक्ष्यति (३, १४, ३) तत्र गोपशुपक्षे च शूलगवोक्तं विधानं वेदितव्यम्। (५) अन्यत्रकरणेऽन्यजातः पुरुषः......, अमुष्या इत्यत्र स्वमातृनामग्रहणम्।

३, १३, ३-४

मध्यममध्या (वर्षा) ष्टकयोरेते विकल्पाः। (४) अत्रापि सिंहावलोकनन्यायेन एषा मेऽष्टका इति मन्त्रमाहुः।

४, १, २ रामप.

दैविकार्थं युग्मानां वेदविदामामन्त्रणम् अधमपक्षे द्वयोरपि, पैतृकार्थं त्वयुग्मानामामन्त्रणम् अधमपक्षे त्रयाणामपि, मात्राद्धचर्थं च तथा ब्राह्मणान् आमन्त्रयेत मातामहानामप्येवमिति स्मृते र्मातामहार्थमपि ब्राह्मणान् आमन्त्रयेत। (१३) पिण्डपितृयज्ञोऽपराह्णे (शांश्रौ. ४, ३, १) इत्यादिना।

४, २, ५-८

अक्षय्यस्थाने (रामप.) ततोऽदो गोत्रस्यास्मत्पितुर् अमुष्याऽस्मिन् श्राद्धे यत् दत्तं तद् अक्षय्यमस्तु उप तिष्ठतामिति वदेत्। (८) संवत्सरानन्तरं सपिण्डीकृते सति चतुर्थस्य प्रपितामहपितु र्विसर्गो विसर्जनं भवति। चकारात्प्रथमस्य सपिण्डन विधिना संसर्गः कार्यः। क्षयाहे पार्वणैकोद्दिष्टयोर्विधिना यथाकुलं पार्वणं तैकोद्दिष्टं कर्तव्यम्।

४, ३, २

त्रिपक्ष स्तृतीयः पक्षस्तत्र सार्धे मासे वा अथवा त्रिभि र्दिवसैर् ऊहः पक्षस्त्रिपक्षो द्वादशाहस्तत्र वा।

४, ५, ८

कुषुम्भक (ऋ १,१९७।१६) इत्यादय ऋचो मण्डलान्त्यभूता स्त्वमग्ने द्युभिरि (ऋ २, १, १) त्यादयो मण्डलादिभूताश्च प्रत्यृचं होतव्याः। मण्डलान्त्यभूता मण्डलादिभूता एवं ऋचो विज्ञेयाः। अत्र ग्रहणे विशेषः। कुषुम्भकोऽगस्त्योऽतृणसूर्याअनुष्टुप्। कुषुम्भकस्त-दब्रवीत् (ऋ १,१९७,१६) त्वमग्ने द्युभिस्त्वमग्ने गृत्समदो जगती। त्वमग्ने द्युभिस्त्व-माशुशुक्षणिः (ऋ २, १, १)। ग्रावदनूगृत्समदौ शकुनो जगती। आवदंस्तं शकुने भद्रभावद (ऋ २, ४३, ३) सोमस्य मा विश्वामित्रोऽग्निस्त्रिष्टुप् सोमस्य मा तवसं वक्ष्यग्ने (ऋ ३, १, १) गृणानाजमदग्निर्मित्रावरुणौ गायत्री। गृणाना जमदग्निना (ऋ ३, ६२, १८) त्वं ह्यग्ने वामदेवोऽग्निरष्टिः। 'त्वां ह्यग्ने सदमित्समन्यवो (ऋ ४, १, १) धामन्ते वामदेवोऽग्निर्जगती। धामन्ते विश्वं भुवनमधिश्रितम् (४, ५८, ११) अबोध्यग्नि बुधगविष्ठिरावग्निस्त्रिष्टुप्। अबोध्यग्निः समिधा जनानाम् (ऋ ५, १, १) गन्ता न एवया मरुन्मारुतोऽतिजगती। गन्तानो यज्ञं यज्ञियाः सुशमि (ऋ ५, ८७, ९) त्वं ह्यग्ने भरद्वाजोऽग्निस्त्रिष्टुप् त्वं ह्यग्ने प्रथमो मनोता (ऋ ६, १, १) यो नः स्वो वायुदेवानुष्टुप्। यो नः स्वो अरणः (ऋ ६, ७५, १९) अग्निनरो वसिष्ठोऽग्नि विराट् अग्नि नरो दीधितिभररण्योः (ऋ ७, १, १) प्रतिचक्षव-सिष्ठ इन्द्र सोमावनुष्टुप्। प्रतिचक्ष्व विचक्ष्व (ऋ ७, १०४, २५) माचिन्प्रगाथ इन्द्रबृहती। मा चिदन्यद्विशंसत (ऋ ८, १, १) आग्नेया हि सोमभिरग्ना मरुतोऽनुष्टुप्। आग्ने याहि मरुत्सखा (ऋ ८, १०३, १४) स्वादिष्टया मधुच्छन्दाः पवमान सोमो गायत्री। स्वादिष्टया मदिष्टया (ऋ ९, १, १) यत्ते राजन् कश्यपः पवमानसोमपङ्क्तिः। यत्ते राजन् छृतं हविः (ऋ ९, ११४, ४) अग्ने बृहस्त्रितोऽग्नि स्त्रिष्टुप्। अग्ने बृहन्नुपसामूर्ध्वो अस्थात् (ऋ १०, १, १)।

तच्छंयोरावृणीमह इत्येका। तच्छंयोरित्येतया एकाहुति र्होतव्या इति करणः प्रधान होम समाप्ति सूचनार्थः। तच्छंयोः शंयुर्विश्वेदेवाः शक्वरी 'तच्छंयोरावृणीमहे' अग्निमीळे इत्यारभ्य तच्छंयोरित्येता विंशति राहुती र्जुहुयात्। ततः स्विष्टकृद्धर्मेण ? स्विष्ट कृदाहुतिः

४, ५, १७

क्षपणं छन्दसां विरामः अनध्यायः।

४, ६, ६

यदि अवश्यमधीयीरन् तदा अहोरात्रमेकं दिनमुपरम्य विरामं कृत्वा प्राध्ययनं कुर्युः।

४, ७, २

उत्पाताः पांसुवृष्ट्यादयस्तेषु, आकालं कालमभिव्याप्य इतिकालम् (इत्य् आकालम् ?) अनध्यायः, तत्कालमारभ्य यावश्यपरेद्युः (यावत्स्यरेद्युः यावत् सोऽपरेद्युः ? यावत् स्वपरेद्युः ?) कालस्तावद् अनध्याय इत्यर्थः। (४) त्रिसन्ध्यम् अहोरात्रम्। (५) एकां श्राद्धभोजने सन्ध्या-

मित्यनुवर्तते.......अत्र सन्ध्याशब्देनाहः शेषो रात्रिश्च लक्ष्यते । (६) अघं सपिण्डसोदकयो र्मरणम् । (७) चकारात् शुक्लकृष्णगा प्रतिपत् तत्रापि नाधीयीत । प्रतिपत्सचतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः । अनध्यायं प्रकुर्वीत मन्वादिषु युगादिष्विति हारीतः । (८) नाभौ भवानि नभ्यानि, नाभिशब्दो मध्यवचनः, वासराणि दिनानि वासरं स्वसराणीति (निघण्टु १, ९) अहर्नामसु पाठात् । अध्यायस्थानां पञ्चर्तवमध्यस्थानां ऋतूनां ग्रीष्मवर्षाहिमन्तानाम् आदिभूतान्यहानि तेषु नाधीयीत । त्रिनाभि चक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति यास्कः (४, २७) । चकारात् सर्वेषामपि आदिभूतान्यहानि तेष्वपि नाध्ययनम् । ऋतूनाम् आदिभूतेषु दिनेषु नाधीयीरन् इति विष्णुस्मरणात् ।

७-८ रामप.

चतुर्दश्याम् अमावास्याम् अष्टम्यां च त्र्यृतुष्टकाद्यादिदिनेषु च अन्येषु च युगादिमन्वादिदिनेषु स्मृत्यन्तरोक्तेषु तथानध्यायद्वयान्तरदिनेषु अयनादिविषुवविष्णुशयनबोधदिनेषु ।

(४३) गात्राणामुद्वर्तनम् । (५३) कल्पे सूत्रे अध्येतव्ये उपाकर्मकरणादूर्ध्वं वर्षवत् अर्धपञ्चेषु सार्धपञ्चमासेषु अनध्यायः परन्तु विद्युत्स्तनयित्नुवर्षवर्जम् ।

रामप.

कल्पे तूपाकरणानन्तरं सार्धपञ्चमासेष्वध्येतव्येऽभ्रवर्षणं नानध्यायहेतुर्विद्युत्पातश्च नानध्यायहेतुः, वेदपाठ एव तयोर् अनध्यायहेतुत्वम्, अन्येऽनध्यायहेतवस्तु कल्पेऽपि तुल्याः ।

४, ८, १४

तेन ओङ्कारेण सन्ततमविच्छिन्नं शिष्योऽधीयीत । (१६) इत्युक्त्वा यथार्थं यथाकार्यार्थं मूत्रपुरीषाद्युत्सर्गार्थं व्रजेयुः । (१७) विरताः स्मेत्यत्र विसृष्टमित्युक्त्वा विरामस्तावत् इत्युक्त्वा वा यथाकार्यं व्रजेयुः । (१९) अधीयानोऽध्ययनं कुर्वाणः शिष्य आत्मानं न विपरिहरेत्, शिष्येणाध्ययनमन्तरितं न कुर्यादित्यर्थः । (२०) यदि कदाचिद् आचार्यशिष्ययोरन्तरा मार्जारादिगमने दोषः स्यात् ।

१९-२० रामप.

पठंश्च छात्रः परिषदो व्यतिरिक्तो न भवेत्, भवंस्तु दोषभाक् स्यात्, तत्परिहाराय प्रायश्चित्तानि चत्वारि......

४, १२, १०

मण्डूकप्लुतिन्यायेन भार्येत्यनुवर्तते । (११) भार्येत्यनुवर्तते...... न भार्याभुक्तशेषं तु अन्नमद्याद् अनापदीति स्मृतिः ।

४, १२, ६

उकार आदरार्थे वीप्सार्थे वा । (१०) यदि कदाचित् सभां व्रजेद् तर्हि समेत्य एकवाक्यतया मिलित्वा कस्यापि उपरि उपघातार्थं नोऽद्दिशेत् ? (११) स्यादिति प्रत्येकं सम्बध्यते ......कुलं-कुलं गृहं गृहं गच्छतीति कुलङ्कुलो न स्यात्......यद्वा कुलः सकुलः पुत्रकलत्रादि-

सहितः, कुलं नीडाश्रयं जर्जरीभूतं वृक्षं न गच्छेदिति वा। इतिहेतिः इति अमुना प्रकारेण अस्य पुरुषस्य स्त्रियो वा हेंति (८) श्रेष्ठा तत्ख्यापको न स्यात्।

रामप.

न वृथा गृहे पर्यटेत्, जनवादप्रकाशकंश्चासमीक्षितकारी न स्यात्।

(१६) नर्वंति पर्जन्ये न धावेत्, न वीक्षेतात्मनो रूपमाशु धावेन् न वर्षयति इति स्मृतिकरण्डिका।

४, १४, ४

उन्नीयम् उत्क्षेपं जुहुयात्। (५) वासिष्ठं सूक्तं त्र्यवसंज्ञकम्, वासिष्ठत्र्यो ग्रंहणं सूक्तस्तुत्यर्थम्।

४, १५, ६

वक्ष्यति त्रिस्त्रिर् उच्चैस्तराम्-उच्चैस्तरां पूर्वं नीचैस्तरां-नीचैस्तरानुत्तरमिति। तस्मिन् स्थापिते कुम्भे स्थापनद्वय (स्थानद्वयम् ?) उत्तराधरतया परिकल्प्य तयो र्यद् उच्चैस्तिष्ठति तस्मिन् दिव्यानां सर्पाणामधिपतिर् अव नेनिक्तामिति अनेन मन्त्रेण त्रिः आवृत्तेन त्रिर् अपो निनयति दक्षिणहस्तेन देवतीर्थेन, ततः पूर्वस्मान् नीचै र्यत् स्थानं तिष्ठति तस्मिन् दिव्याः सर्पाः अव नेनिजतामिति मन्त्रेण त्रिर् आवृत्तेन त्रिर् अपो निनयति। (७) फणेन काष्ठमयेन फलकेन चेष्टयति सर्पाकृति फणेन करोतीत्यर्थः।

रामप.

फलकेन काष्ठमयेन स्पृशति।

(११) उपघातं प्रक्षेपम्। (१४) एवमुक्तप्रकारेणोदकुम्भे स्थलान्तरे तथैव स्थानद्वयमुत्तराधरतया परिकल्प्य उत्तरे आन्तरिक्षा अधिपतयोऽधस्तने आन्तरिक्षाः सर्पाः। (१७-१८) पूर्वमन्त्रवचनं क्रियायुक्तं दिव्यानामिति त्रिस्त्रिर् अभ्यसेत् इतरस्मात् प्रदेशात् उच्चैस्तराम्-उच्चैस्तरां कुर्यात्, अयमर्थः, अधिपतेः सर्वस्माद् अपि प्रदेशाद् उच्चैः स्थानता कार्येत्यर्थः ..., उत्तरमन्त्रवचनं क्रियायुक्तं दिव्याः सर्पा इति अधिपतेः स्थानात् नीचैस्तरां त्रिस्त्रिर् अभ्यसेत्।

४, १८, २

सुहेमन्त इति मन्त्रेण जपः कर्मसंयोगात्, तत्र स्विष्टकृदादि तन्त्रशेषसमापनम्।

४, १९, २

यथोपपादं यथासम्भवम्, मिथुनानां चक्रवाकादीनां, कर्कन्धुपर्णानि कर्कन्धुर-आरण्यबदरी, तत्पत्रवत् पत्राणि पिष्टानि पिष्टस्य यवपिष्टस्य तण्डुलपिष्टस्य वा कृत्वा ततः, मिथुनानां पत्राणि पिष्टानि बदरीपत्रवत् कार्याणीत्युक्तत्वान् मिथुनानामप्याकृतिः कार्या। (३) तुन्दिलः बृहदुदरः पुरुषः किन्नरो बृहन्मुखः पिष्टस्य कार्यः। (४) त्रयो गोलकाः। (५) नक्षत्राणि कृत्तिकादीनि च, पुनः अन्वाकृतयस्तेषां नक्षत्राणामाकृतयो लोकतोऽन्यशास्त्रतो गवेषणीयां (गवेषणीयाः ?)।

५, १, २

यदा आत्मनि अग्नेः समारोहणं करोति तदा एहीति मन्त्रेण······सकृद् अग्ने समारोहणम्, तूष्णीं द्विद्विः समारोहणम् ।

५, २, १

पुष्करिण्यादिजलाशयानामुत्सर्गरूपं कर्म वक्ष्याम इति वाक्यशेषः ।

५, ३, १

आरामप्रतिष्ठोद्यानप्रतिष्ठाकर्मोच्यत इति वाक्यशेषः । (५) आरामोत्सर्गकर्मणि हिरण्यं सुवर्णं दक्षिणात्वेन देयम् ।

५, ४, १

कारिका—

परिशिष्टादावसथ्ये पार्वणातिक्रमे चरुः ।
वैश्वानरायाग्नये वा (चा) ग्नये तन्तुमते तथेति ।।

(३) सायंप्रातर्होमातिक्रमे प्रायश्चित्तमिदं वक्ष्यमाणं ज्ञेयमिति वाक्यशेषः । (६) एवमापत्तिवशाद् यावन्तो होमा अतिक्रान्तास्तावन्त आज्यस्रुवाः परिगृह्य हुत्वा पूर्ववद् व्रीहिभिर्वा (व्रीहिभि र्यवै र्वा) सायंप्रातर्होमा विधेयाः ।

५, ७, २

यदि बाल अकृतजातकर्मासीत्, तदा नामकरणकाले एकादशदिने जातकर्मकालातिक्रमनिमित्तं प्रायश्चित्तं कृत्वा तज्जातकर्मकालः । (४) पूर्वमकृतत्वान् मातृयागं कृत्वा लौकिकाग्निं स्थाप्य···सीमन्तकर्मप्रधानाहुति (० तीर्) हुत्वा कर्मसमापनम्, गर्भाधानादिकं कर्म सीमन्तेनोपलक्षितमिति कारिकोक्तत्वात् । ततो भिन्नस्थण्डिले जातकर्मार्थं सूतकाग्निं संस्थाप्य ···अनुप्राणनादिकं कर्म विधाय नामकर्माख्यं कर्म कार्यम् ।

रामप.

अकृते सीमन्तोन्नयने प्रजायेत चेत्, तदा···सीमतोन्नयनवत् सर्वं कर्म कृत्वा···· ।

५, ८, ६

(तु. ४, ३) एवमुक्तप्रकारेण पूर्वमारिण्याः पूर्वमृताया मातुः एभिस्त्रिभिः पिण्डैः प्रक्षिप्य प्रेतपिण्डैः संसृज्य सपिण्डं कार्यम् ।

५, १०, ३

परिभाषासूत्रमेतत् । (४) परिभाषेयम् । (६) भाद्रकृष्णाष्टकायाम् पितृयज्ञवद्धोम इत्युक्तत्वात् प्राचीनावीतिना कार्यः, अपसव्येन दक्षिणामुखतया च ।

५, ११, २

महाशान्ति सग्रहां विनायकशान्तिम् ।

६, १, १

अथ शकरादीनां त्रयाणां व्रतानां पूर्वोक्तानां विशेषविधानार्थं षष्ठाध्यायं चिकीर्षन्

आचार्यः पुनः प्रारभते अर्थात् इत्यादिना⋯स्वाध्यायलक्षणस्य आरण्यकस्य। (२) अथ व्रतादेशनम् (२, ११, १) इत्यारभ्याथातो दण्डनियमा (२, १३, १) इत्येतत्पर्यन्तं संक्षिप्योक्तं पुन विशदीकरोत्याचार्योऽहोरात्रमित्यादिना (३-५-तु. २, १२, १०) (४) सिंहादयः शवरूपा लोके उच्यन्ते 'शशको मृगयु र्व्याघ्रः सिंहः श्वा गर्दभो वृकः। शववद् दर्शनं तेषां रहस्यं वर्जयेत् सदेति पाराशरः। (५) यानि पश्वादीनि आस्येन मुखेन प्रविशेयुः बिले प्रवेशनं कुर्वन्ति तेषां दर्शने चानध्यायः ते च सर्पादयः प्रसिद्धाः। (८) ग्रामाध्ययने ग्राममध्याध्ययने यानि अहानि दिवसाः अन्तर्हितानि शवादिना तेष्वनध्यायः। (९) अनवक्लिप्तः असावधानोक्षारादिना (?) यदा तदा त्रिरात्रोऽनध्यायः

व्याधिना परिभूतो य आधिना वा समाहितः।
तस्य त्रिरात्रोऽनध्यायः सोदके च मृते तथा। इति काष्र्णाजिनिः।

(११) अर्धशब्दः प्रत्येकमभिसम्बध्यते। पर्वणाम् अमावास्यापौर्णमासीनामह्नः दिवसस्य उपार्धानि पूर्वार्धानि चतुर्दशीरूपाणि तेषु अनध्यायः, तथा पर्वणामह्नः दिवसस्य उत्तरार्धानि प्रतिपदादिरूपाणि तेष्वनध्यायः। चकाराद् अष्टम्यादिष्वनध्यायः।

६, २, १

अध्ययनं न कार्यमुपनिषदः। (५) मण्डलकरणं चोदकधारया तूष्णीम् अनुक्तत्वात्। (६) जनैर्लोकैर् अग्रीयं मुख्यं स्तुत्यमित्यर्थः। एवं समं कार्यम्। यथा लोकाः स्तुतिं कुर्वन्ति। (७) उत्तरानन्तरा शान्तिः, वामदेव्यं कया नश्चित्र इति तमभिव्याप्य इत्यावामदेव्यम्। (८) अथ शाक्वरादिव्रते प्रणवादिव्याहृतिम् आरभ्य गायत्रादिदशार्चम्। पुनःप्राध्येपणं प्रकर्षेणाध्यनं प्रश्नोत्तरं पुनः विधेयम्। (९) शरीरवशत्वात् मूत्रपुरीषाद्युत्सर्गे कृते बहिर्मण्डलाल् लौकिकोदकैः शुद्धिं कृत्वा कर्मशुद्ध्यर्थं शान्तिपात्रोदकेनाचमनं विधाय शेषमध्ययनं विधेयम्। (१३) इतिपूर्वोक्तं सर्वमनध्यायाद् आरभ्य मण्डलादिकरणं भाषितं परिभाषितं ज्ञेयमित्याचार्योक्तिः।

६, ३, ७

अथानन्तरम् अपिन्वमानैः पणिभिरिति द्वितीयार्थे तृतीया. आचार्यः स्वौ हस्तौ निर्णिक्तौ सार्द्रौ शान्तिपात्रे पूर्वं स्थापिते दूर्वाकाण्डवतीषु दूर्वाङ्कुरवतीषु अप्सु उदकेषु आधाय संस्थाप्य ततः शिष्याणां पाणिभिः पाणीन् हस्तान् सार्द्रान् संस्थाप्य प्राधीयीरन् प्राध्ययनं चरुः (कुर्युः ?) किंविशिष्टैः पणिभिः ? अपिन्वमानैर् अपिन्वमानान् असंसृष्टान्. अयमर्थः, आचार्यः स्वैः हस्तैस्तेषां हस्तैश्च पात्रमाच्छाद्य प्राध्ययनं कारयति। (तु. गोगृ ३, २; कां समयां पूरयित्वा सर्वौषधीः कृत्वा हस्ताव् अवधाय। ८) एकः कश्चित् शान्तिभाजनं शान्तिपात्रम् अशून्यं हस्तेन कुर्यात्। आचार्यस्तु नियत एव। उत्तरतोऽग्नेः कंसे मणिं कृत्वेत्यारण्यके (कौषिआ १२, ८) उक्तत्वात् कांस्यपात्रे मणिः पाषाणः स्थाप्यः, दधिमधुसंयुक्ताः सक्तवो मन्थसंज्ञकः स्थाप्यश्च दधिमधुभ्यामुपमन्थ्येति (९, ८) उक्तत्वात्। (९) प्राधीयीरन्निति पूर्वमुक्तम्। तत्र विशेषविधानमाह। सर्वे साचार्याः शिष्याः अध्यायाद्यन्तयोः⋯शान्तिपात्रे हस्तान् आधाय श्रवणं (श्रावणम्) कुर्युः। शिष्यैर्यथा श्रोत्रं शक्यं भवति तथाचार्येण पठनीयम्। तद् यथा प्रजापति वैं संवत्सरः (१) नैवंविदुषोऽवतर्दः १, हिङ्कारेण प्रतिपद्यत एतदुक्थमित्यादि १, (कौषिआ १, १, ८; २, १)

## ६, ४, ३

अदब्धं मन इति सूर्यवीक्षणं कृत्वा युवं सुरामं स्वस्ति न इत्याद्यृक्त्रयम् (इति आपृक् D इति आवृक्°) शक्करीणां व्रते प्रत्यस्मा इत्यतः पूर्वं प्रथमतो भवति। (४) एवं दश........ श्रावयेत्। ततोऽनुवाचनधर्मेण वाग्यमयुक्तायोषणीषिणे माणवकाय (तु २, १२, १२) महानाम्नीः विदा मघवन्निति नव ऋचः पाठयेत्, एवाह्येवेत्यादि पञ्च पुरीषपदानि च श्रावयेत्—अभितः पश्चाद् अपि प्रत्यस्मा इत्यादि दश श्रावयित्वा ओङ्कारश्च चतस्रो व्याहृतयो गायत्र्यभि त्वा शूर त्वामिद्धि कया न इति श्रावयेत्। एवमभितः शक्करीणां भवति। अथोत्तरेषु प्रकरणेषु स्वाध्यायमेव कुर्वत आचार्यस्येतरः शृणोतीति (२, १२, १४) पूर्वमुक्तत्वात् श्रावणमेव शिष्याणां न पाठं (पाठः पाठनम् ?) (७) संहितानामाघातः संहिताया (कौषिब्रा ७, ८) इत्यादीनां पूर्वं प्रथमतः ऋतं वदिष्यामि सत्यं वदिष्यामीत्यारभ्य व्योम संदृशीत्यन्तं श्रावयेदिति विशेषो ज्ञेयः। अयमर्थः। अदब्धं मन इति सूर्यावेक्षणोत्तरं युवं सुराममिति ऋक्चतुष्टयं श्रावयित्वा चित्रो ह वा इति (कौषिब्रा ३, १,—कौषउ १, १) अध्यायचतुष्टयम् (३—६) श्रावयेत् ततः ऋतं वदिष्यामीति (७, १) खण्डं श्रावयित्वा आघातः संहिताया इत्यारभ्याध्यायद्वयम् (७, २—८, ११) श्रावयेदित्यर्थः। (८) अथानन्तरं मन्थस्य मन्थाख्यस्य यो ह वा (कौषिब्रा ६, २) इत्यारभ्य यावत्समाप्तिपर्यन्तम् अध्येतव्यस्य द्वे एते ऋचौ पूर्वे पूर्वं श्रावयेत्। द्वितीयार्थे सप्तमी। चकारो विशेषार्थः इति विशेषो ज्ञेयः। (९) ऋतं वदिष्यामि तत् सवितुरित्यादिश्रावणान्तरम् अदब्धं मन इति श्रावयेत्, द्वयोरप्यनन्तरम्। इति प्रकारेण ऋतं वदिष्यामि ततः (तथा) तत् सवितुरित्याधिकारिकाः अधिकारे भवाः शान्तयो ज्ञेया इत्यर्थः। भिन्नाधिकारख्यापनार्थमेतद् उक्तमित्यौपनिषदे—१—९—। (१०) इति पूर्वोक्तं सर्वमाह्निकमनुष्ठानं विजानीयात्।

## ६, ५, १

तमहमात्मनि दधे इत्यनेन मन्त्रेण स्वकीये आत्मनि आत्मानं सूर्यमभिनिहितं स्थापितमीक्षन्ते। निहितं तं पूर्वोक्तम् उद् इति मन्त्रं पठित्वा हिंसुन इमं (तम् अहम् इतीमम् ?? ) मन्त्रं पठित्वा सूर्यं आत्मन (सूर्यम् आत्मनि ?) निरीक्षेरन् सर्वे मन्त्रावृत्या पृथक्—पृथक्...(२) इमं मन्त्रं साचार्याः शिष्या जपन्ति अविशेषात्। (६) उदीक्षन्ते साचार्याः शिष्याः।

## ६, ६, २

ततः साचार्याः शिष्या व्यावर्तमानाः परावर्तमानधर्मयुक्ताः शान्त्युदकपात्रनिकटे प्रत्यायन्ति प्रत्यागमनं कुर्वन्ति तत्रैवोपविशन्ति च। (५) अस्य पतितोदकस्य अभिकर्षन्ति अंशं नयन्तीत्यर्थः। सर्वे-(९) शान्तिपात्रस्थं दूर्वाकाण्डम्, (१०) देवतर्पणं कुर्युः दक्षिणेन जानुनाक्रम्य मूले कुशतरुणानिति (२, ७, ५) पूर्वमुक्तत्वात्—(तु० १०, १२, तु० ४, ९, १०—१३, श्री ४, ११, ११–१६, यथागमेत्यादिभिश् चतुर्भिर्मन्त्रैस्तद् भूमिस्थमुदकमनुमन्त्रयन्ते शिष्यास्तथा देवानां वो चो ?) पस्थानं कुर्युः—ततस्तद्दिने उपवेशनं न कार्यं सर्वैं शिष्यैर् अहःशेषं स्थानमुपवासश्चेति (२, ७, २९) पूर्वमुक्तत्वात्। ततः उष्णीषं भाजनं दक्षिणां गां ददति आचार्याय शिष्याः प्रत्येकम् (२, १२, १५) तत उप उपवीतं दण्डं मेखलां कृष्णाजिनं च न हि ते क्षत्र-

मिति ऋचा प्रणवेन वोदकेषु निक्षिपेत् (२, १३, ८)···! अत्र शाक्करादीनामन्ते यासु देवतासु दत्ताः शिष्यास्तेभ्यो वैश्वदेवः चरुः कार्य इति माण्डूकेयमतम्—अपराह्णेऽत्तधानानां भिक्षणादि (२, ८, १) पूर्ववद् धोमो लौकिकाग्नौ (तु. २, ८, १) इत्येवम् अत्रानुक्तं सर्वं पूर्वस्मात् प्रकरणाद् ऊहनीयम् । ततः समावर्तनम् । द्विरभ्यासो अध्यायसमाप्तिसूचनार्थो मंगलार्थो वा ।

---

| शांगृ. | ऋसं० |
|---|---|
| १, ४, २ अद्या नो देव सवितः | ५, ८२, ४ अद्या नो देव सवितः |
| ,, ,, ,, अपेहि मनसस्पते | १०, १६४, १ अपेहि मनसस्पते |
| ,, ,, ,, ऋतं च सत्यं च | १०, १९०, १ ऋतं च सत्यं चाभीद्धात् |
| ,, ,, ,, आदित्या अव हि ख्यत | ८, ४७, ११ आदित्या अव हि ख्यत |
| ,, ,, ,, ३, १, १६* इन्द्र श्रेष्ठानि | २, २१, ६ इन्द्र श्रेष्ठानि द्रविणानि धेहि |
| ,, ,, ,, हंसः शुचिषत् | ४, ४०, ५ हंसः शुचिषद् वसुरन्तरिक्षसत् |
| ,, ,, ,, नमो महद्भ्यः | १, २७, १३ नमो महद्भ्यो नमो अर्भकेभ्यः |
| ,, ,, ,, ६, ५, ६ यत इन्द्र भयामहे | ८, ६१, १३ यत इन्द्र भयामहे |
| ,, ,, ,, अध स्वप्नस्य | १, १२०, १२ अध स्वप्नस्य निर्विदे |
| ,, ,, ,, यो मे राजन् | २, २८, १० यो मे राजन् युज्यो वा सखा वा |
| ,, ,, ,, ३, १, ८ ममाग्नेवर्चः | १०, १२८, १ ममाग्ने वर्चो विहवेष्वस्तु |
| ,, ,, ,, १५, १२ स्वस्ति नो मिमीताम् | ५, ५१, ११ स्वस्ति नो मिमीतामश्विना भगः |
| २, ६, २ | |
| ,, ६, १ अनृक्षराः | १०, ८५, २३ अनृक्षरा ऋजवः सन्तु पन्थाः |
| ,, ,, ६ आ नः प्रजाम् | ,, ,, ४३ आ नः प्रजां जनयतु प्रजापतिः |
| ,, ९, ५ त्वमग्नेः प्रमतिः | |
| ,, ९, ६ यस्येमे हिमवन्तः | ,, १२१, ४ यस्येमे हिमवन्तो महित्वा |
| ,, १२, ३ रैभ्यासीत् | ,, ८५, ६ रैभ्यासीदनुदेयी |
| ,, ,, ,, चित्तिरा उपबर्हणम् | ,, ,, ७ चित्तिरा उपबर्हणम् |
| ,, ,, ४ समञ्जन्तु विश्वे देवाः | ,, ,, ४७ समञ्जन्तु विश्वे देवाः |
| ,, ,, ७ रूपम्-रूपम् | ६, ४७, १८ रूपम्-रूपं प्रतिरूपो बभूव |
| ,, ,, ८ नीललोहितम् | १०, ८५, २८ नीललोहितं भवति |
| ,, ,, ९ मधुमतीरोषधीः | ४, ५७, ३ मधुमतीरोषधीर्द्याव आपः |
| ,, १३, १ सम्राज्ञी श्वशुरे भव | १०, ८५, ४६ सम्राज्ञी श्वशुरे भव |
| ,, ,, २ गृभ्णामि ते सौभगत्वाय हस्तम् | ,, ,, ३६ गृभ्णामि ते सौभगत्वाय हस्तम् |
| ,, १५, १ प्र त्वा मुञ्चामि | ,, ,, २४ प्र त्वा मुञ्चामि वरुणस्य पाशात् |
| ,, ,, २ जीवं रुदन्ति | ,, ४०, १० जीवं रुदन्ति वि मयन्ते अध्वरे |
| ,, ,, ३ अक्षन्नमीमदन्त | १, ८२, २ अक्षन्नमीमदन्त हि |

* अत्र पादनिर्देशः

| | |
|---|---|
| १, १५, ४ शुची ते चक्रे | १०, ८५, १२ शुची ते चक्रे यात्या |
| ,, ,, ,, द्वे ते चक्रे | ,, ,, १६ द्वे ते चक्रे सूर्ये |
| ,, ,, ६ खे रथस्य | ८, ८०, ७ खे रथस्य खेऽनसः |
| ,, ,, ८ युक्तस्ते अस्तु दक्षिणः | १, ८२, ५ युक्तस्ते अस्तु दक्षिणः |
| ,, ,, ,, शुक्रावनड्वाहौ | १०, ८५, १० शुक्रावनड्वाहावास्ताम् |
| ,, ,, १० अभि व्ययस्व खदिरस्य | ३, ५३, १९ अभि व्ययस्व खदिरस्य सारम् |
| ,, ,, ११ त्यं चिदश्वम् | १०, १४३, २ त्यं चिदश्वं न वाजिनम् |
| ,, ,, १२ स्वस्ति नो मिमीताम् | ५, ५१, ११ स्वस्ति नो मिमीतामश्विना भगः |
| ,, ,, १३ सुकिंशुकम् | १०, ८५, २० सुकिंशुकं शल्मलिं विश्वरूपम् |
| ,, ,, १४ मा विदन् परिपन्थिनः | ,, ,, ३२ मा विदन् परिपन्थिनः |
| ,, ,, १५ ये वध्वः | ,, ,, ३१ ये वध्वश्चन्द्रं वहतुम् |
| ,, ,, १६; ५, ३, ४ वनस्पते शतवल्शः | ३, ८, ११ वनस्पते शतवल्शो वि रोह |
| ,, ,, १७, ४, १५, २२ सुत्रामाणम् | १०, ६३, १० सुत्रामाणं पृथिवीं द्यामनेहसम् |
| ,, ,, १८ अश्मन्वती | ,, ५३, ८ अश्मन्वती रीयते सं रभध्वम् |
| ,, ,, २० उद्व ऊर्मिः | ३, ३३, १३ उद्व ऊर्मिः शम्या हन्तु |
| ,, ,, २२ इह प्रियम् | १०, ८५, २७ इह प्रियं प्रजया ते समृध्यताम् |
| ,, १६, ५ अघोरचक्षुः | ,, ,, ४४ अघोरचक्षुरपतिघ्न्येधि |
| ,, ,, ६ कया नश्चित्रः | ४, ३१, १ कया नश्चित्र आ भुवत् |
| ,, ,, ७ उत त्या दैव्या भिषजा | ८, १८, ८ उत त्या दैव्या भिषजा |
| ,, ,, १२ इहैव स्तम् | १०, ८५, ४२ इहैव स्तं मा वि यौष्टम् |
| ,, १७, १; ४, ५, १० दधिक्राव्णो अकारिषम् | ४, ३९, ६ दधिक्राव्णो अकारिषम् |
| ,, १७, ३ ध्रुवैधि पोष्या मयि | १०, ८५, ६ (खिल) |
| ,, ,, ७ पिबतं च तृप्णुतं च | ८, ३५, १० पिबतं च तृप्णुतं चा च गच्छतम् |
| ,, १८, ४; २२, ७ प्रजापते | १०, १२१, १० प्रजापते न त्वदेतान्यन्यः |
| ,, १९, १ उदीर्ष्वातः पतिवती | " ८५, २१ उदीर्ष्वातः पतिवती ह्येषा |
| ,, २०, ५ अग्निना रयिम् | १, १, ३ अग्निना रयिमश्नवत् |
| ,, ,, ,, तन्नस्तुरीपम् | ३, ४, ९ तन्नस्तुरीपमध पोषयित्नु |
| ,, ,, ,, समिद्धाग्निर्वनवत् | ५, ३७, २ समिद्धाग्निर्वनवत् स्तीर्णबर्हिः |
| ,, ,, ,, ५, ८, २* पिशङ्गरूपः | २, ३, ९ पिशङ्गरूपः सुभरो वयोधाः |
| ,, २१, २ ब्रह्मणाग्निः संविदानः | १०, १६३, १ ब्रह्मणाग्निः संविदानः |
| ,, ,, ३ अक्षीभ्यां ते नासिकाभ्याम् | " १६२, १ अक्षीभ्यां ते नासिकाभ्याम् |
| ,, २२, ७ नेजमेष परापत | १०, १८४, १ (खिल) |
| ,, २२, १२ विष्णुर्योनिं कल्पयतु | " १८४, १ विष्णुर्योनिं कल्पयतु |

* अत्र पादनिर्देशः

| | |
|---|---|
| १, २२, १२ राकामहम् | २, ३२, ४ राकामहं सुहवां सुष्टुती हुवे |
| ,, २५, ७ त्वं सोम महे भगम् | १, ९१, ७ त्वं सोम महे भगम् |
| ,, ,, ,, यच्चिद्धि | ४, १२, ४ यच्चिद्धि ते पुरुषत्रा यविष्ठा |
| ,, ,, ,, महश्चित् | ४, १२, ५ महश्चिदग्न एनसो अभीके |
| ,, ,, ८ अग्न आयूंषि | ९, ६६, १९ अग्न आयूंषि पवसे |
| ,, ,, ९;३,१,१६;४,१८,५ स्योना पृथिवि भव | १, २२, १५ स्योना पृथिवि भव |
| २, २, १३ गणानां त्वा | २, २३, १ गणानां त्वा गणपतिं हवामहे |
| ,, ,, १४ आ गन्ता मा रिषण्यत | ८, २०, ,, आ गन्ता मा रिषण्यत |
| ,, ५, १२; ७,१९;६,४,८ तत्सवितुर्वरेण्यम् | ३, ६२, १० तत्सवितुर्वरेण्यम् |
| ,, ८, १ सदसस्पतिमद्भुतम् | १, १८, ६ सदसस्पतिमद्भुतम् |
| ,, १२, १६ त्वं तम् | ,, ,, ५ त्वं तं ब्रह्मणस्पते |
| ,, ,, ,, उच्चा दिवि | १०,१०७,२ उच्चा दिवि दक्षिणावन्तो अस्थुः |
| ,, १४, ५ वास्तोष्पते प्रतिजानीह्यस्मान् | ७, ५४, १, वास्तोष्पते प्रतिजानीह्यस्मान् |
| ,, १४, १६ ये देवासः | १, १३९, ११ ये देवासो दिव्येकादश स्थ |
| ,, ,, १८ ये अग्निदग्धाः | १०, १५, १४ ये अग्निदग्धा ये अनग्निदग्धाः |
| ,, ,, २६ मोघमन्नं विन्दते अप्रचेताः | ,, ११७, ६ मोघमन्नं विन्दते अप्रचेताः |
| ३, १, ६ युवं वस्त्राणि | १, १५२, १ युवं वस्त्राणि पीवसा वसाथे |
| ,, ,, ७ आयुष्यं वर्चस्यम् | १०,१२८,३ (खिल) |
| ,, ,, ९ गृहं गृहमहना | ,, १२३, ४ गृहं गृहमहना यात्यच्छा |
| ,, ,, १० आ रोहत | १०, १८, ६ आ रोहतायुर्जरसं वृणाना |
| ,, ,, ११ दीर्घंस्ते अस्त्वङ्कुशः | ८, १७, १० दीर्घस्ते अस्त्वङ्कुशः |
| ,, ,, १३ वनस्पते वीड्वङ्गः | ६, ४७, २६ वनस्पते वीड्वङ्गो हि भूयाः |
| ,, ,, ,, शास इत्था | १०, १५२, १ शास इत्था महाँ असि |
| ४,६,५;६,५,६ शास इत्था महाँ असि | ,, ,, ,, |
| ३, ३, १० उक्षा समुद्रः | ५, ४७, ३ उक्षा समुद्रो अरुषः सुपर्णः |
| ,, ४, ८ वास्तोष्पते | ७, ५४, १ वास्तोष्पते प्रति जानीह्यस्मान् |
| ,, ,, ,, अमीवहा वास्तोष्पते | ,, ५५ ,, अमीवहा वास्तोष्पते |
| ,, ,, ,, वास्तोष्पते ध्रुवा स्थूणा | ८, १७, १४ वास्तोष्पते ध्रुवा स्थूणा |
| ,, ६, ३ अपि पन्थामगन्महि | ६, ५१, १६ अपि पन्थामगन्महि |
| ,, ८, ६; ५, ५, ११ भद्रं कर्णेभिः | १, ८९, ८ भद्रं कर्णेभिः शृणुयाम देवाः |
| ,, ,, ७; ६, ६, १ तच्चक्षुः | ७, ६६, १६ तच्चक्षुर्देवहितम् |
| ,, ९, १; ११, ५ पूषा गा अन्वेतु नः | ६, ५४, ५ पूषा गा अन्वेतु नः |
| ,, ९, २ परि पूषा | ६, ५४, १० परि पूषा परस्तात् |
| ९, ३ आ गावो अग्मनु | ,, २८, १ आ गावो अग्मन्नुत भद्रमक्रन् |

| | |
|---|---|
| ३, ६, ५; ११, १५* मयोभूर्वातः | १०, १६६, १ मयोभूर्वातो अभि वातूस्राः |
| ,, १०, ३, संवत्सरीणं पय उस्रियायाः | ,, ८७, १७ संवत्सरीणं पय उस्रियायाः |
| ३, १३, २; ४ ये तातृषुः | १०, १५, ९ ये तातृषुर्देवत्रा जेहमानाः |
| ४, ५, ७ अग्निमीळे पुरोहितम् | १, १, १ अग्निमीळे पुरोहितम् |
| ,, ,, ८ कुषुम्भकस्तदब्रवीत् | ,, १९१, १६ कुषुम्भकस्तदब्रवीत् |
| ,, ,, ,, आवदँस्त्वं शकुने भद्रमा वद | २, ४३, ३ आवदँस्त्वं शकुने भद्रमा वद |
| ,, ,, ,, गृणाना जमदग्निना | ३, ६२, १८ गृणाना जमदग्निना |
| ,, ,, ,, धामन् ते विश्वं भुवनमधि श्रितम् | ४, ५८, ११ धामन् ते विश्वं भुवनमधिश्रितम् |
| ,, ,, ,, गन्ता नो यज्ञं यज्ञियाः सुशमि | ५, ८७, ९ गन्ता नो यज्ञं यज्ञियाः सुशमि |
| ,, ,, ,, यो नः स्वो अरणः | ६, ७५, १९ यो नः स्वो अरणः |
| ,, ,, ,, प्रति चक्ष्व वि चक्ष्व | ७, १०४, २५ प्रति चक्ष्वं वि चक्ष्व |
| ,, ,, ,, आऽग्ने याहि मरुत्सखा | ८, १०३, १४ आऽग्ने याहि मरुत्सखा |
| ,, ,, ,, यत्ते राजञ् छृतं हविः | ९. ११४, ४ यत्ते राजञ् छृतं हविः |
| ,, ,, ९ तच्छंयोरावृणीमहे | १०, १९१, ५ (खिल) |
| ,, ६, ४ उदु त्यं जातवेदसम् | १, ५०, १ उदु त्यं जातवेदसम् |
| ,, ,, ,, चित्रं देवानाम् | ,, ११५, १ चित्रं देवानामुदगादनीकम् |
| ,, ,, ,, नमो मित्रस्य | १०, ३७, ,, नमो मित्रस्य वरुणस्य चक्षसे |
| ,, ,, ,, सूर्यो नो दिवस्पातु | ,, १५८, १ सूर्यो नो दिवस्पातु |
| ,, १३, ४, शुनं न फालाः | ४, ५७, ८ शुनं नः फाला वि कृषन्तु भूमिम् |
| ,, ,, ५ क्षेत्रस्य पतिना | ,, ,, १ क्षेत्रस्य पतिना वयम् |
| ,, १४, ५ समुद्रज्येष्ठाः | ७, ४९, १ समुद्रज्येष्ठाः सलिलस्य मध्यात् |
| ,, १७, ५ अप नः शोशुचदघम् | १, ९७, १ अप नः शोशुचदघम् |
| ४, १८, ३ शन्नो मित्रः | १०, ९०, ९, शन्नोमित्रः शंवरुणः |
| ,, १८, ४ समुद्रादूर्मिः | ४, ५८, १ समुद्रादूर्मिर्मधुमा उदारत् |
| ४, १८, ११ उदीर्ध्वं जीवः | १, ११३, १६ उदीर्ध्वं जीवः |
| ५, १, ३ अयं ते योनिः | ३, २९, १० अयं ते योनिर्ऋत्वियः |
| ,, ,, ९ त्वमग्ने व्रतपाः | ८, ११, १ त्वमग्ने व्रतपा असि |
| ,, २, ४ त्वं नो अग्ने | ४, १, ४ त्वं नो अग्ने वरुणस्य विद्वान् |
| ,, ,, ,, अव ते हेळः | १, २४, १४ अव ते हेळो वरुण नमोभिः |
| ,, ,, ,, इमं मे वरुण | ,, २५, १९ इमं मे वरुण श्रुधी |
| ,, ,, ,, उदुत्तमं वरुण | ,, २४, १५ उदुत्तमं वरुण पाशमस्मत् |
| ,, ,, ,, इमां धियं शिक्षमाणस्य | ८, ४२, ३ इमां धियं शिक्षमाणस्य देव |
| ,, ,, ६ विश्वतश्चक्षुः | १०, ८१, ३, विश्वतश्चक्षुरुत विश्वतोमुखः |

---

* अत्र मयोभूरिति प्रतीकनिर्देशः

